## 2.प्रकरणम्

भवेत्प्रकरणो वृत्तं लौकिकं कविकल्पितम् ।

शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।।

**उदाहरणम् -**

विप्रनायकः यथा मृच्छकटिकम् । अमात्यनायकः मालतीमाधवम् । वणिङ्नायकः पुष्पभूषितम् ।

**Contd.....**

सापायधर्मकामार्थपरो धीरशान्तकः ।

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।।

(अस्य नाटकप्रकृतित्वाच्छेषं नाटकवत् ।)

उदाहरणम् -

कुलस्त्री पुष्पभूषिते । वेश्या तु रङ्गवृत्ते । द्वे अपि मृच्छकटिके ।

# 3. भाणः

भाणः स्याद्धूर्तचरितो नानावस्थान्तरात्मकः ।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।।

Contd.....

रङ्गे प्रकाशयेत्स्वेनानुभूतमितरेण वा ।

सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।।

Contd.....

सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः ।

तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।

मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ।।

उदाहरणम् –

लीलामधुकरः ।

# 4.व्यायोगः

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।

हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ।।

एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।

कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ।।

राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।

हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ।।

यथा – सौगन्धिकाहरणम्, मध्यमव्यायोगः, इत्यादयः ।

# 5. समवकारः

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् ।

सन्धयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे ।।

सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः ।

नायका द्वादशोदात्ताः प्रख्याता देवमानवाः ।।

फलं पृथक्पृथक्तेषां वीरमुख्योऽखिलो रसः ।

वृत्तयो मन्दकौशिक्यो नात्र बिन्दुप्रवेशकौ ।।

Contd.....

वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश ।

गायत्र्युष्णिङ्मुखान्यत्र च्छन्दांसि विविधानि च ।।

त्रिशृङ्गारस्त्रिकपटः कार्यश्चायं त्रिविद्रवः ।

वस्तु द्वादशनालीभिर्निष्पाद्यं प्रथमाङ्कगम् ।।

द्वितीयेऽङ्के चतसृभिर्द्वाभ्यामङ्के तृतीयके ।

यथा-समुद्रमथनम् ।

# 6.डिमः

मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।

उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ।।

अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।

चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ।।

Contd.....

नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।

भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।।

वृत्तयः कौशिकीहीना निर्विमर्शाश्च सन्धयः ।

दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ।।

उदाहरणं 'त्रिपुरदाहः'।

# 7. ईहामृगः

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः ।

मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ।।

नरदिव्यावनियमौ नायकप्रतिनायकौ ।

ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ।।

दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।

शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत् ।।

Contd.....

पताका नायका दिव्या मर्त्या वापि दशोद्धताः ।

युद्धमानीय संरम्भं परं व्याजान्निवर्तते ।।

महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ।

एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ।।

दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

यथा---कुसुमशेखरविजयादिः ।

